| | [illegible] | Commission Merchant | Head Iron Smith |
|---|---|---|---|
| | 2 | 8 | 1 |
| 16 | 2 | 7 | 1 |
| 17 | 2 | 6 | 1 |
| 18 | " | " | " |
| 19 | 2 | 7½ | 1 |
| 20 | 1 | 6 | 1 |
| 21 | 1 | 5 | 1 |
| 22 | 2 | 5 | 1 |
| 23 | 1 | 5 | 1 |
| 24 | 1 | 4 | 1 |
| 25 | 1 | 6 | 1 |
| 26 | 1 | 7 | 1 |
| 27 | 1 | 7 | 1 |
| 28 | 1 | 5 | 1 |

ज्ञानस्वौदय ; चिगदादासी
पुरुषोत्तम क्षेत्र में १ असज वदी
सोमवार, १८६५ वि. लिपित॥
१६ पत्रक॥ ल० अ० १५ पं० प्र०

ह० लि०

2A

ॐ नमः शिवाय ॥ अथागमतात् किंचिल्लिख्यते ॥ अतः परं प्रव
क्ष्यामि यंत्रं त्रैलोक्यमोहनं सिद्धिपुञ्जसमुद्भूतं नादबिंदुसमन्वि
तं स्वयंभु त्रिकोणकं चैव रेखा नामपिङ्गलेभं अस्य यंत्रस्य माहा
त्म्यं किं वक्तुं शक्यते मया ॥ यस्य संधारणाच्छ्रिरसि विजयी देवकी
सुतः ॥ त्रैलोक्यं मोहयामास रासमंडलमध्यगः ॥ इति यंत्रवर्णनं
अथातः संप्रवक्ष्यामि तिलकं त्रैलोक्यमोहनं विमुखं त्रिकोण
कं कृत्वा सिखामध्ये नियोजयेत् ॥ कुंकुमेन चंदनेनाथ तिलकं
कुलमिरितं ॥ इति कुलतिलकं ॥ अथोर्द्ध्वपुंड्रं लिख्यते ॥ ऊर्द्ध्वपुंड्रं
त्रिपुंड्रं स्यात् त्रिपुंड्रेनोर्द्ध्वपुंड्रकं ॥ सच्छिद्रं कुरुते यस्तु ऊर्द्ध्वपुंड्रं च
मानवः धर्मार्थकाममोक्षेषु छिद्रं तस्य प्रजायते ॥ दक्षिणे तस्य
ब्रह्मास्ति वामपार्श्वे श्रियः पतिः ॥ मध्ये शंभुं विजानीयात्तस्मा
न्मध्यं न लोपयेत् ॥ इति ऊर्द्ध्वपुंड्रं ॥ ॥ तस्य स्वरूपमा
ह ॥ उर्द्ध्वपुंड्रं प्रवक्ष्यामि तिलकं तिलकेषु चोत्तमं यस्य संधारणाद्देवि
सर्वपापैः प्रमुच्यते ॥ भ्रूमध्यात्केशपर्यंतं लिंगाकारेण संस्थितं
छिद्रहीनं सिखाहीनं ऊर्द्ध्वपुंड्रं प्रचक्ष्यते ॥ ५ ॥

3 ॐनमः शिवाय ॥ अथ पंचीकरणप्रकारं विवि
च्यदर्शयति ॥ प्रथमतः भूतपंचकमुत्पन्नं तामसाहंका
रात्तेद्विधाजातं तत्रैकं भागं तथैवावस्थितं अपरं चतुर्द्धा
कृत्वा स्वातिरिक्तेभ्यो दत्तं गृहीतं च तेभ्यो यथा पृथ्वी अ
स्थि मांस नाडी त्वचा रोमेत्यंशा पंचवती मिष्टस्वादु पीतवर्णा
कठिनस्वभावा ॥ रेतोपित्तं स्वेदो लाला रक्तं चेति जलं पंचांशं
द्रवलक्षणं स्वेतवर्णं क्षारस्वादु सीतलस्वभावं चेति ॥ क्षुधा
त्रिषा निद्रा कांति आलस्यं चेत्यंशापंचकं तेजः रक्तव
र्णः कटुस्वादु उष्णस्वभावः ॥ धावन प्रसारन उत्क्रमन
चलन संकोचनं चेत्यंशापंचकं वायुः हरितवर्णः षु
षकस्वभावः अम्लस्वादुः ॥ लोभमोह क्रोध काम भयं
चेत्यंशापंचकमाकाशः कषायस्वादुः धूम्रवर्णः शू
न्यस्वभावः एवं सप्रकृतिकानि पंचतत्वान्युक्तानि ॥
अथाधुना कस्मै केन किं दत्तं कस्माच्च किं केन गृहीतं एतत
मितिप्रकारं दर्शयति ॥ यथा पृथिव्या मुख्यांशं अस्थि

स्वयं रक्तं मांसं जलेभ्यो दत्तं नाडी तेजसे त्वचा वायु
वे रोममाकाशाय दत्तमिति॥ एवं जलानामर्द्धं शुं रे
त रूपं स्वीयं पित्तं तेजसे दत्तं स्वेदं वायुवे लालमा
काशाय रक्तं पृथिव्यै दत्तमिति॥ तेजस अर्द्धं क्षुधा रू
पं स्वीयं। त्रिषा वायुवे दत्तं निद्रा आकाशाय कांतिज
लेभ्यो आलस्यं पृथिव्यै दत्तमिति॥ एवं वायो रर्द्धं शं
धावनं स्वीयं प्रसारनमाकाशाय दत्तं उतक्रमनं तेज
से चलनं जलेभ्यो संकोचनं पृथिव्यै दत्तमिति॥ आ
काशस्यार्द्धं शुं लोभाख्यं स्वीयं कामं वायुवे दत्तं क्रो
धं: तेजसे मोहः जलेभ्यो भयं पृथिव्यै दत्तमिति मेलनं

| | पृथिवी | जल | तेज | वायु | नभ | |
|---|---|---|---|---|---|---|
| पृथ्वी | अस्थि | रक्त | आलस्य | संकोच | भय | |
| अप | मांस | रेत | कांति | चलन | मोह | |
| तेज | नाडी | पित्त | क्षुधा | उतक्रम | क्रोध | |
| वायु | त्वचा | स्वेद | त्रिषा | धावन | काम | |
| व्योम | रोम | लाला | निद्रा | प्रसारन | लोभ | |

ॐ नमः शिवाय ॥ श्रीदेव्युवाच देवदेव महादेव सर्वज्ञप
रमेश्वर कथयस्व प्रभो सर्वं कृपां कृत्वा ममोपरि १ कथं ब्र
ह्मांडमुत्पन्नं कथं वा परिवर्त्तते कथं विलीयते देव वद ब्रह्मांड
निर्णयं २ श्रीमहादेव उवाच ॥ तत्वाद्ब्रह्मांडमुत्पन्नं तत्वेन प
रिवर्त्तते तत्वात्संलीयते देवि तत्वाद्ब्रह्मांड निर्णयः ३ देव्युवाच ॥
तत्वमेव परं मूलं निश्चितं तत्ववादिभिः तत्वस्वरूपं किं देव
तत्वमेव प्रकाशय ४ ईश्वर उवाच निरंजनो निराकार एको
देवो महेश्वरः तस्मादाकाशमुत्पन्नं आकाशाद्वायुसंभवः ५
वायोस्तेजस्ततश्चापस्ततः पृथ्वी समुद्भवः एतानि पंच तत्वानि
विस्तीर्णानि च पंचधा ६ तेभ्यो ब्रह्मांडमुत्पन्नं तैरेव परिवर्त्तते
विलीयते च तत्रैव तत्रैव रमते पुनः ७ पंचतत्वमये देहे पंच
तत्वानि सुंदरि सूक्ष्मरूपेण वर्त्तंते ज्ञायंते तत्वयोगिभिः ८ अ
तएव प्रवक्ष्यामि शरीरस्थं स्वरोदयं हंसाचारस्वरूपेण भवेत्
ज्ञानं त्रिकालजं ९ गुह्याद्गुह्यतरं सारमुपकारप्रकाशनं
इदं स्वरोदयं ज्ञानं ज्ञानानां मस्तके मणिः १० सूक्ष्मात्सूक्ष्मतरं
ज्ञानं सुबोधं सत्यप्रत्ययं आश्चर्यं नास्तिके लोके आधार

5

स्वास्तिके जने ११ शांते शुद्धे सदाचारे गुरुभक्तैकमानसे दृढचित्ते कृ
तज्ञे च देयं चैव स्वरोदयं १२ दुष्टे च दुर्जने क्रुद्धे अशांते गुरुलोपके
हीनसत्वे दुराचारे स्वरज्ञानं न दीयते १३ शृणु त्वं कथितं देवि देह
स्थं ज्ञानमुत्तमं येन विज्ञानमात्रेण सर्वज्ञत्वं प्रजायते १४ स्वरे वेदा
श्च शास्त्राणि स्वरे गांधर्वमुत्तमं स्वरे सर्वं च त्रैलोक्यं स्वरे आत्मस्व
रूपकं १५ स्वरहीनोऽथ दैवज्ञो नाथहीनं यथा गृहं शास्त्रहीनो
यथा वक्ता शिरहीनं च तद्वपुः १६ नाडीभेदं तथा प्राणतत्वभेदं त
थैव च सुषुम्णामिश्रभेदं च यो जानाति स मुक्तिगः १७ साकारे वा नि
राकारे शुभवायुवले कृते कथयंति शुभं किंचित् स्वरज्ञानं वरान
ने १८ ब्रह्मांडखंडपिंडाद्यं स्वरेणैव हि निर्मितं सृष्टिसंहारकर्ता
च स्वरः साक्षान्महेश्वरः १९ स्वरज्ञानात्परं मित्रं स्वरज्ञानात्परं
धनं स्वरज्ञानात्परं गुह्यं न वा दृष्टं न वा श्रुतं २० शत्रुं हन्यात्स्वरव
ले तथा मित्रसमागमः लक्ष्मीप्राप्तिः स्वरवले कीर्त्तिः स्वरवले सुखं २१
कन्याप्राप्तिः स्वरवले स्वरवले राजदर्शनं स्वरवले देवतासिद्धिः।
स्वरवले क्षितिपो वशः २२ स्वरवले गम्यते देशो भोज्यं स्वरवले
तथा लघुदीर्घं स्वरवले मलं चैव निवारयेत [illegible] सर्वशास्त्रपु

राणां हि स्मृति वेदांग पूर्वकं स्वरज्ञानात्परं मित्रं नास्ति किंचिद्वरा
नने २४ नामरूपादिकाः सर्वे मिथ्या सर्वेषु विभ्रमः अज्ञान
मोहिता मूढा यावत्तत्वं न विद्यते २५ इदं स्वरोदयं शास्त्रं सर्व
शास्त्रोत्तमोत्तमं आत्मघटप्रकाशार्थं प्रदीपकलिकोपमं २६॥
यस्मै कस्मै परस्मै वा न प्रोक्तं प्रश्नहेतवे तस्मादेतत्स्वयं ज्ञेयं आ
त्मनैवात्मनात्मनि २७ न तिथिर्न च नक्षत्रं न वार ग्रह देवता न
विष्टिर्न व्यतीपातो विरुद्धाद्यास्तथैव च २८ कुयोगा नैव देवेशि
प्रभवंति कदाचन प्राप्ते स्वरबले शुद्धे सर्वमेव शुभं फलं २९
नाभिस्थानेकद्रूपोस्ति अंकुरो दयनिर्गताः द्वासप्ततिसहस्राणि
देहमध्ये व्यवस्थिता ३० नाडीस्था कुंडलीशक्ति भुजंगाकारशा
यिनी ततो दशोर्द्धगा नाड्यो दशैवाधः प्रतिष्ठिता ३१ द्वे द्वे तिर्यग्गता
नाड्यश्चतुर्विंशति संख्यया प्रधाना दश नाड्यस्तु दश वायुप्रवाह
काः ३२ तिर्यगूर्द्धमधस्ताद्वा वायुर्देहे समन्विता चक्रवत्तु स्थिता
देहे सर्वाः प्राणसमाश्रिता ३३ तासां मध्ये दश श्रेष्ठा दशानां तिस्र उ
त्तमाः इडा च पिंगला चैव सुषुम्णा च तृतीयका ३४ गांधारी हस्त

१

6 जिह्वाच पूषाचैव यशस्विनी अलंवुषाकुहूश्चैव शंखिनीद
शमी तथा ३५ इडावामे स्थिता भागे दक्षिणे पिंगला तथा सुषुम्णा
मध्यदेशेतु गांधारी वामचक्षुषि ३६ दक्षिणे हस्तिजिह्वाच पूषा
कर्णेच दक्षिणे यशस्विनी वामकर्णे आननेचाप्यलंवुषा ३७
कुहूश्च लिंगदेशेतु मूलस्थानेच शंखिनी एवंद्वारं समाश्रित्य
तिष्ठंति दशनाडिकाः ३८ इडाच पिंगला सुषुम्णा प्राणमार्गे
समाश्रिताः एताहि दशनाड्यस्तु देहमध्ये व्यवस्थिताः ३९ ना
मानि नाडिकानांतु वातानां प्रवदाम्यहं प्राणोपानसमानश्च
उदानो व्यान एवच ४० नागकूर्मोथ कृकलो देवदत्तो धनंज
यः हृदि प्राणो वसेन्नित्यं अपानो गुदमंडले ४१ समानो नाभि
देशेतु उदानः कंठमध्यगः व्यानो व्यापी शरीरेषु प्रधानाः पं
च वायवः ४२ प्राणाद्याः पंचविख्याता नागाद्याः पंचवाय
वः तेषामपिच पंचानां स्थानानिच वदाम्यहं ४३ उद्गारे ना
ग आख्यातः कूर्म उन्मीलने स्मृतः कृकलो क्षुतकृत ज्ञेयो दे
वदत्तो विजृंभणे ४४ न जहाति मृतं वापि सर्वव्यापी धनंजयः

एतेनाडीषुसर्वासुभ्रमंतेजीवरूपिणः ४५ प्रकटंप्राणसंचारं
लक्षयेद्देहमध्यतः इडापिंगलासुषुम्णानाडीभिस्तिसृभिर्बुधः ४६
इडावामेचविज्ञेयापिंगलादक्षिणेस्मृता इडानाडीस्थितावामा
ततोव्यस्ताचपिंगला ४७ इडायांसंस्थितश्चंद्रःपिंगलायांच
भास्करः सुषुम्णायांतुरूपेण शंभुर्हंसस्वरूपधृक् ४८ हका
रोनिर्गमेप्रोक्तः सकारोंतः प्रवेशने हकारःशिवरूपेणसका
रःशक्तिरुच्यते ४९ शक्तिरूपःस्थितश्चंद्रोवामनाडीप्रवा
हकः दक्षनाडीप्रवाहश्चशंभुरूपीदिवाकरः ५० श्वासेस
कारसंस्थेतुयद्दानंदीयतेबुधैः तद्दानंजीवलोकेस्मिन्कोटि
कोटिगुणंभवेत् ५१ अनेनलक्षयेद्योगीचैकचित्तःसमाहितः
सर्वमेवविजानीयान्मार्गेवैचंद्रसूर्ययोः ५२ ध्यायेत्तत्वंस्थिरे
जीवेजुहुयाज्जीवसंगमे इष्टसिद्धिर्भवेत्तस्यमहालाभोजयस्तथा ५३
चंद्रसूर्यस्वराभ्यासंयेकुर्वंतिसदानराः अतीतानागतंज्ञानं
तेषांहस्तगतंसदा ५४ वामेचामृतरूपंस्याज्जगदाप्यायनंपरं द
क्षिणेचरमेभागेजगदुत्पादयेत्सदा ५५ निर्गमेतुशुभावामा
मध्यमाभवति क्रूरा दुष्टा सर्वकर्मसु ॥ सर्वत्र शुभकार्येषु
वामाभवति इष्टदा ॥५६ ॥

3
7

प्रवेशे दक्षिणा शुभा शुभकार्ये शुभा वामा दक्षिणा क्रूरकर्म
सु ५६ चंद्रः समस्तु विज्ञेयो रविस्तु विषमः सदा चंद्रः स्त्रीपुरु
षः सूर्यश्चंद्रो गौरो सितो रविः ५७ इडा पिंगला सुषुम्णा च ति
स्रो नाड्यः प्रकीर्तिताः इडायास्तु प्रवाहेण सौम्यकर्माणि
कारयेत् ५८ पिंगलायाः प्रवाहेण रौद्रकर्माणि कारयेत्
सुषुम्णायाः प्रवाहेण सिद्धमुक्तफलानि च ५९ आदौ चंद्रः
सिते पक्षे भास्करस्तु सितेतरे शुभे शुभफलं ज्ञेयं त्रीणि त्रीणि
क्रमोदये ६० सार्द्धद्विघटिका ज्ञेया शुक्ले कृष्णे शशी रविः ॥
वहत्येकदिनेनैव यथा षष्टिघटीक्रमात् ६१ वहेत्तावद्घटी
मध्ये पंचतत्त्वानि निर्दिशेत् प्रतिपत्तो दिनान्याहुर्विपरीते विप
र्ययः ६२ शुक्लपक्षे भवेद्वामा कृष्णपक्षे च दक्षिणा जानीया
त्प्रतिपत्पूर्वं योगी तद्गतमानसः ६३ उदयं चंद्रमार्गेण सूर्ये
णास्तमनं यदि ददाति गुणसंघातं विपरीते विपर्ययः ६४ पा
शांकं चारयेद्रात्रौ दिवा चार्यो दिवाकरः इत्यभ्यासरतो योगी
स योगी नात्र संशयः ६५ सूर्येण बध्यते सूर्यश्चंद्रश्चंद्रेणावं॰

ध्यते योजनातिक्रियामेतां त्रैलोक्यं वशयेत् क्षणात् ६६ गुरु
शुक्र बुधेंदूनां वासरे वामनाडिका सिद्धिदा सर्वकार्येषु शुक्ल
पक्षे विशेषतः ६७ एकैकस्य घटी पंच क्रमेणैवोदयंति च
क्रमादेकैकनाड्यां तु तत्वानां पृथगुद्भवः ६८ अहोरात्र
स्य मध्ये तु विज्ञेया द्वादशार्कमाः वृष कर्कट कन्यालि मृग
मीन निशाकरे ६९ मेषे सिंहे च धनुषि तुलायां मिथुने घटे
उदयो दक्षिणे ज्ञेयः शुभाशुभ विनिर्णयः ७० तिष्ठेत पूर्वो
त्तरे चंद्रः सूर्यो दक्षिण पश्चिमे वामाचार प्रवाहेन न गच्छेत्पूर्व
मुत्तरं ७१ दक्षनाडी प्रवाहे तु न गच्छेद्याम्यपश्चिमे परिपंथि
भयं तस्य गतो सौ न निवर्तते ७२ सूर्योदये यदा चंद्रश्चंद्रोदये
यदा रविः सिध्यंति सर्वकार्याणि दिवा रात्रिगतान्यपि ७३
शुक्ल पक्षे द्वितीयायामर्के वहति चंद्रमाः दृश्यते लाभदः पुंसा
सौम्ये सौख्यं प्रजायते ७४ चंद्रकाले यदा सूर्यः सूर्यश्चंद्रोदये
भवेत् उद्वेगः कलहो हानिः शुभं सर्वं निवारयेत् ७५ प्रथमे म
नसोद्वेगं धनहानि द्वितीयके तृतीये गमनं प्रोक्तमिष्टनाशं च

~~शुक्लपक्षे द्वितीयायामर्के वहति चंद्रमा~~
~~...लाभदः पुंसां सौम्ये सौख्यं प्रजायते~~

तुर्यके १६ पंचमे राज्यविध्वंसं षष्ठे सर्वार्थनाशनं सप्तमे व्या
४ धिदुःखानि अष्टमे मृत्युमादिशेत् १७ कालत्रये दिनान्यष्टौ वि
परीतं यदा भवेत् तदा दुष्टफलं प्रोक्तं किंचिन्न्यूने तु शोभनं १८
प्रातर्मध्याह्नयोश्चंद्रः सायंकाले दिवाकरः तदा नित्यं जयं
लाभं विपरीतं तु दुःखदं १९ दक्षिणाय दिवा वामे यत्र नाडीनि
रंतरं तं पादमग्रतः कृत्वा निःसरेन्निजमंदिरा २० महानिःक
लहे नैव कंटकैर्नापि भिद्यते निवर्त्तते सुखेनैव सर्वोपद्रव
वर्जितः २१ गुरुबंधुनृपामात्या अन्येपीप्सितदायिनः पूर्णां
गे खलु कर्त्तव्याः कार्यसिद्धिमभीप्सिता २२ आसने शयने वा
पि पूर्णांगे विनिवेशिता वशीभवंति कामिन्यो न कार्मणमिमां
तरं २३ अरिचौराधमर्णाद्या अन्येप्युत्पातविग्रहाः कर्त्त
व्याः खलु रिक्तांगे जयलाभसुखार्थिभिः २४ दूरदेशे विधात
व्यं गमनं तु हिमद्युतौ अभ्यर्णदेशे दीप्ते तु तरणाविति केचन २५
यत्किंचित्पूर्वमुद्दिष्टं लाभादि समरागमः तत्सर्वं पूर्णनाडीषु जा
यते निर्विकल्पकं २६ शून्यनाड्यां विपर्यस्तं यत्पूर्वं प्रतिपा

दितं जायते मान्य यथाचैव यथा सर्वज्ञभाषितं ८७ व्यवहारे
खलोच्चाटे द्वेषि विद्यादि वंचकाः कुपितस्वामि चौराद्याः
पूर्णस्था स्युर्भयंकराः ८८ दूराध्वनि शुभश्चंद्रो निर्विघ्नेन
ष्टसिद्धिदः प्रवेशे कार्यहेतुः स्यात्सूर्यः शीघ्रं प्रशस्यते ८९
अग्रतो वामिका श्रेष्ठा पृष्ठतो दक्षिणा शुभा वामे च वामि॰
का प्रोक्ता दक्षिणे दक्षिणा स्मृता ९० चंद्रचारे विषं हंति सू
र्ये वालां वशं नयेत् सुषुम्णायां भवेन्मोक्ष एक एव त्रिधा
स्मृता ९१ अयोग्ये योग्यता नाडी योग्यस्थानेप्ययोग्यता
कार्यानुबंधतो जीवः कथं रुद्रः समाचरेत् ९२ शुभाशु
भानि कार्याणि क्रियंतेहर्निशं यदा तदा कार्यानुबंधेन का
र्यं नाडीप्रचालनं ९३ अथेडा स्थिरकर्मण्यलंकारे दू
राध्वगमने तथा आश्रमे हर्म्यप्रासादे वस्तूनां संग्रहेपि च ९४
वापीकूपतडागादि प्रतिष्ठास्तंभदेवयोः यात्रा दाने विवाहे च
वस्त्रालंकारभूषणे ९५ शांतिकं पौष्टिकं चैव दिव्यौषधि
रसायनं स्वस्वामिदर्शने मैत्री वाणिज्ये कणसंग्रहे ९६ १८

गृहप्रवेशे सेवायां कृष्यां बीजादिवापने शुभे कर्मणि संयो
५ १ ग निर्गमे च शुभः शशी ९७ विद्यारंभादिकार्येषु बांधवानां
च दर्शने जलमोक्षेषु धर्मेषु दीक्षायां मंत्रसाधने ९८ का
लविज्ञानसूत्रं च चतुःपदगृहागमः कलाव्याधिचिकि
त्सायां स्वामिसंबोधने तथा ९९ गजाश्वारोहणे धन्विग
जाश्वानां च बंधने परोपकरणे चैव निधीनां स्थापने
तथा १०० गीतवाद्यादिनृत्यादौ गीतशास्त्रविचारणे॰
पुरग्रामनिवेशे च तिलकछत्रधारणे १ आर्ते शोके वि॰
षादे च ज्वरिते मूर्छिते पि वा स्वजनस्वामिसंबंधे धान्यादि॰
दारुसंग्रहे २ स्त्रीणां दंतादिभूषायां हर्षे रणगमने तथा गु
रुपूजाविषादीनां चालने च वमने ३ इडायां सिद्धिदं प्रो
क्तं योगाभ्यासादिकर्म च तत्रापि वर्जयेद्वायुतेज आकाश
मेव च ४ सर्वकार्याणि सिद्ध्यंति दिवारात्रिगतान्यपि सर्वेषु
शुभकार्येषु चंद्रचारः प्रशस्यते ५ अथ पिंगला ॥ कठिनक्रू
रविद्यानां पठने पाठने तथा स्त्रीसंगवेश्यागमने महानौ

काधिरोहणे ६ मद्यकार्ये सुरापाने मलमूत्राद्युपासने
सा॰२ विद्वेषोद्वेगसंहरणादि विषहानादि वैरिणि ७ शस्त्राभ्यासे च ग
मने मृगयापशुविक्रये इष्टिकाकाष्ठपाषाणरत्नघर्ष॰
णदारणे ८ गत्यभ्यासे यंत्रतंत्रे दुर्गपर्वतरोहणे द्यूते चौ
र्ये गजाश्वादिरथसाधनवाहने ९ व्यायामे मारणोच्चाटे
षट्कर्मादिकसाधने यक्षिणीयक्षवेतालविषभूतादिविग्र
हे १० खरोष्ट्रमहिषादीनां मत्तमातंगवाहने नदीजलौ
घतरणे भेषजे लिपिलेखने ११ मारणं मोहनं स्तंभं विद्वेषोच्चा
टनं वशं प्रेरणकर्षणे क्षोभे दाने चक्रयविक्रये १२ खड्गह
स्ते वैरियुद्धे भोगे वा राजदर्शने भोज्यस्नाने व्यवहारक्रूरे च
दीप्ते रविः शुभः १३ भुक्तमात्रेण मंदाग्नौ स्त्रीणां वश्यादि॰
कर्माणि शयनं सूर्यवाहेन कर्तव्यं तु सदा बुधैः १४ क्रूरा
णि यानि कर्माणि चराणि विविधानि च तानि सिद्ध्यंति सू
र्येण नात्र कार्या विचारणा १५ अथ सुषुम्णा ॥ क्षणं वा
मे क्षणं दक्षे यदा वहति मारुतः सुषुम्णा सा च विज्ञेया स

वैकार्यहरास्मृता १६ तस्यां नाड्यां स्थितो वह्निर्ज्वलंती काला
लरूपिणी विषुवंती विजानीयात्सर्वकार्यविनाशिनी १७ प
रस्तु क्रममुल्लंघ्य यस्य नाडीद्वयं वहेत् तदा तस्य विजानीयाद
६ 10 शुभं समुपस्थितं १८ वामे क्षणं क्षणं वायुर्विषमं भावमादि
शेत् विपरीतफलं ज्ञेयं ज्ञातव्यं च वरानने १९ उभयोरेव सं
चारे विषवंती समादिशेत् न कुर्यात् क्रूरसौम्यादि तत्सर्वं निः
फलं भवेत् २० जीविते मरणे प्रश्ने लाभालाभे जयाजयो वि
षुवे वैपरीत्यं स्यात् संस्मरेज्जगदीश्वरं २१ ईश्वरस्मरणं कु
र्याद्योगाभ्यासादिकर्म च अन्यत्तत्र न कर्तव्यं जयलाभसु
खेप्सुभिः २२ सूर्येण वहमानायां सुषुम्णायां मुहुर्मुहुः शा
पं दद्याद्वरं दद्यात्सर्वथा न तदन्यथा २३ सुषुम्णायां प्रवाहे च
नाडीसंक्रमणे तथा शुभं किंचिन्न कर्तव्यं पुण्यदानादिको
ऽपि वा २४ विषुवत्सूदये यात्रा मनसापि न चिंतयेत् यात्रा
मृत्युकरा हि स्यात् हानिः क्लेशो न संशयः २५ अनादिवि
षमासंधिर्निराहारं निराकुलं परे सूक्ष्मे लयं गत्वा सा संध्या

संधिरुच्यते २६ न संध्यां संधिमित्याहुः संध्यासंधिर्निगद्यते
विषुवत्संधिगः प्राणास्सा संध्यासंधिरुच्यते २७ न वेदं वेदमि
त्याहुर्वेदो वेदो न विद्यते परात्मा विद्यते येन स वेदो वेद
उच्यते २८ ॥ इति नाडीभेदस्समाप्तः ॥ ॥ अथ तत्वनि
र्णयः ॥ श्रीदेव्युवाच देवदेव महादेव सर्वसंसारतारक ॥
स्थितं त्वदीय हृदये रहस्यं वद मे प्रभो ॥ २९ ईश्वर उवाच ॥
स्वरज्ञानमिदं रहस्यं न किंचिदिष्टदेवता स्वरज्ञानरतो योगी
स योगी परमो मतः ३० पंचतत्वं भवेत्सृष्टिस्तत्वे तत्वं विली
यते पंचतत्वं परं तत्वं तत्वातीतं निरंजनं ३१ तत्वानां नाम
विज्ञेयं सिद्धियोगेन योगिनां भूतानां दुष्टचिह्नानि जानंति
हि स्वरोत्तमाः ३२ पृथिव्यापस्तथा तेजो वायुराकाशमे
व च पंचभूतात्मकं सर्वं यो जानाति स पूजितः ३३ सर्वलोक
स्य जीवानां न देहे भिन्नतत्वकं भूलोकात्सप्तपर्यंतं नाडीभे
दः पृथक् पृथक् ३४ वामे वा दक्षिणे वापि उदयाः पंच कीर्त्ति
ताः अष्टधा तत्वविज्ञानं शृणु वक्ष्यामि सुंदरि ३५ प्रथमे

तत्वसंख्यायां द्वितीये स्वाससंधिषु तृतीये स्वरचिह्नानि चतुर्थे
स्थानमेवच ३६ पंचमे तस्य वर्णश्च षष्ठेतु प्राणमेवच सप्तमे
७ ॥ स्वादुसंयुक्त मष्टमे गतिलक्षणं ३७ एवमष्टविधं प्राणं विषुवंतं
चराचरं स्वरात्परतरं देवि नान्यथात्वंबुजासने ३८ निरीक्षि
तव्यं यत्नेन यदा प्रत्यूषकालतः कालस्य वंचनार्थाय कर्मकु
र्वंतियोगिनः ३९ श्रुत्योरंगुष्ठकौ मध्यांगुल्यौ नासापुटद्वये
वदने प्रांत्यकोपांत्यांगुली देये दृगंतयोः ४० अस्यांतरं तु
पृथिव्यादितत्वज्ञानं भवेत् क्रमात् पीतश्वेतारुणश्यामैर्विंदु
भिर्निरुपाधिकं ४१ दर्पणेन समालोक्य स्वासं तत्र विनिक्षि
पेत् आकारैस्तु विजानीयात् तत्वभेदं विचक्षणः ४२ चतु
रस्रं चार्द्धचंद्रं त्रिकोणं वर्तुलं स्मृतं विंदुभिस्तु नभोज्ञेयमाका
रैस्तत्वलक्षणं ४३ मध्ये पृथ्वी अधश्चाप ऊर्द्ध्वं वहति चान
लः तिर्यग्वायुप्रचारश्च नभो वहति संक्रमे ४४ माहेंद्रं मधु
रं स्वादं कषायं जलमेवच तीक्ष्णं तेजः समीरोम्ल आकाशं
कटुकं तथा ४५ अष्टांगुलं वहेद्वायुरनलश्चतुरंगुलः द्वाद

शांगुलमाहेंद्रः षोडशांगुल वारुणः ४७ आपश्वेता क्षितीपीत
रक्तवर्णो हुताशनः मारुतो नीलजीमूत आकाशं भूरिवर्णकं २१
स्कंधदेशे स्थितो वह्निः नाभिमूले प्रभंजनः जानुदेशे मही तोयं
पादांते मस्तके नभः ४८ पृथिव्यां स्थिरकर्माणि चरकर्माणि
वारुणे तेजसा समकार्याणि मारणोच्चाटने निले ४९ व्योम्नान
किंचित्कर्तव्यं अभ्यासाद्योगसेवया शून्यता सर्वकार्येषु
नात्र कार्या विचारणा ५० पीतशनैर्मध्यवाही हनु यावद्गु
रुध्वनिः कवोष्णः पार्थिवो वायुः स्थिरकार्यप्रसाधकः ५१
अधोवाही गुरुध्वानः शीघ्रगः शीतलः सितः यो द्वादशांगुलो
वायुः स आप्यः शुभकर्मतत् ५२ आवर्त्तगश्चात्युष्णश्च शो
णाभश्चतुरंगुलः उर्द्ध्ववाही तु यः क्रूरः कर्मकारी स तैजसः ५३
उष्णशीतः कृष्णवर्णस्तिर्यग्गामी षडंगुलः वायुः पवनसंज्ञोयं
चरकर्मसुसिद्धिदः ५४ यः समीरः समरसः सर्वतत्वगुणाव
हः अंबरं तं विजानीयाद्योगिनां योगदायकं ५५ पीतं चैव च
तुः कोणं मधुरं मध्यमाश्रयं भोगदं पार्थिवं तत्वं प्रवाहे द्वाद

ंगुलं ५६ श्वेतवर्णं चार्द्धचंद्रं कषायं स्वादधोवहं लाभकृ॰
द्वारुणतत्वं प्रवाहे षोडशांगुलं ५७ रक्तं त्रिकोणं तिक्तं स्या॰
12 दूर्द्धमार्गप्रवाहकं दीप्तं च तैजसं तत्वं प्रवाहे चतुरंगुलं ५८॥
नीलवर्तुलसंकाशं स्वाद्वम्लं तिर्यगाश्रितं चपलं मारुतंत॰
त्वं प्रवाहे ष्टांगुलं स्मृतं ५९ वर्णाकारस्वादुवाहे रव्यक्तं
सर्वगामि च मोक्षदं व्योमतत्वं हि सर्वकार्येषु निःफलं ६०
पृथ्वीजले शुभे तत्वे तेजो मिश्रफलोदयः हानिमृत्युकरौ पुं
सामशुभौ व्योममारुतौ ६१ आपूर्वे पश्चिमे पृथ्वी तेजश्च
दक्षिणे तथा वायोश्चोत्तरदिग्ज्ञेया मध्यकोणगतं नभः ६२
चिरलाभः क्षितौ ज्ञेयस्तत्क्षणात्तोयतत्वतः हानिःस्या
द्वह्निवाताभ्यां नभसा निःफलं भवेत् ६३ चंद्रे पृथ्वीज
ले स्यातां सूर्ये चाग्निर्यदा भवेत् तदा सिद्धिर्न संदेहः सौम्या
सौम्येषु कर्मसु ६४ लाभः पृथ्वीकृतो ह्नि स्यान्निशायां ला
भकृज्जलं वह्नौ मृत्युः क्षतिर्वायो नभः स्यान्न दहेत्क
चित् ६५ जीवितव्ये जये लाभे कृष्यां च धनकर्षणे मंत्रा

ध्यै युद्ध प्रश्ने च गमनागमने तथा ६६ आयातिवारुणोस्त्र
तत्रस्थोपि शुभं क्षितौ प्रयाति पवनोन्यत्र हानिमृत्युर्नलो
नले ६७ पृथिव्यां मूलचिंतास्याज्जीवस्य जलवातयोः ते
जसा धातुचिंतास्यात् शून्यं काशतो वदेत् ६८ पृथिव्यां मा
बहुपादास्युर्द्विपदा तोयवायवः तेजसाच चतुःपादा नभः
सा पादवर्जिताः ६९ कुजो वह्निरविः पृथ्वी सौरिरापः प्रकी
र्तिता वायुस्थानस्थितो राहुः दक्षरंध्रप्रवाहकः ७० जले
चंद्रो बुधः पृथ्वी गुरुर्वाते शितो नले वाममनाड्यां स्थि
ता सर्वे सर्वकार्येषु निश्चिताः ७१ पार्थिवे मूलविज्ञानं
जीवज्ञानं जले तथा आग्नेय्यां धातुविज्ञानं व्योम्नि शून्यं वि
निर्दिशेत् ७२ तुष्टिः पुष्टिरतिः क्रीडा जयोहास्यं धरा जले तेजो
वायोश्च सुषुप्त्याख्या ज्वराः कंपप्रवासिनः ७३ गतायुर्मत्युरा
काशे चंद्रावस्थाः प्रकीर्तिताः द्वादशैताः प्रयत्नेन ज्ञातव्याः
देशिकोत्तमैः ७४ पूर्वायां पश्चिमे याम्ये उत्तरायां यथाक्र
मं पृथिव्यादीनि भूतानि बलिष्ठानि विनिर्दिशेत् ७५ ॥

पृथिव्यापस्तथा तेजो वायुराकाशमेव च पंचभूतात्मके देहे
ज्ञातव्यं च वरानने १६ अस्थिमांसं त्वचा नाडी रोमं चैव तु
13 पंचमं पृथ्वी पंच गुणा एते ब्रह्मज्ञानेन भाषिता १७ शुक्रशो
६ णितमज्जा च लाला मूत्रं च पंचमं आपः पंचगुणाः प्रोक्ताः॰
ब्रह्मज्ञानेन भाषिताः १८ क्षुधा तृष्णा तथा निद्रा कांतिरा
लस्यमेव च तेजः पंचगुणा प्रोक्ताः ब्रह्मज्ञानेन भाषिता १९
धावनं वल्गनं गंधं संकोचनप्रसारणे वायोः पंच गुणाः
प्रोक्ता ब्रह्मज्ञानेन भाषिताः २० रागद्वेषौ तथा लज्जा भ
यं मोहश्च पंचमः नभः पंचगुणाः प्रोक्ता ब्रह्मज्ञानेन भा॰
षिताः २१ पृथिवी पल पंचाशच्चत्वारिंशदपस्तथा तेज
३० स्त्रिंशद्विजानीयाद्वायुर्विंशतिरिंदुजः २२ पार्थिवे चिर
कालेन लाभश्चापे क्षितौ भवेत् वह्निवायुकृते प्रश्ने ला
भालाभं वदेद्बुधः २३ पुरतो वारुणो लाभः स्थिरेणाच पुरंद
रे ज्ञायते पवनो स्वल्पः सिद्धो व्योम्नि विनश्यति २४ पृथ्वी
पंच अपां वेदा गुणास्तेजो द्वि वायुतः नभ एक गुणं चैव त

त्वज्ञानमिदं भवेत् ८५ फूत्कारकृत्स्नस्फुटिता विदीर्णा
पतिता धरा ददातिसर्वकार्येषु अवस्थासदृशं फलं ८६
भरणी कृत्तिका पुष्ये मघा पूर्वा च फाल्गुनी पूर्वाभाद्रपदा
स्वाती तेजस्तत्वमितिप्रिये ८७ विशाखोत्तरफाल्गुन्यौ हस्त
चित्रा पुनर्वसू अश्विनी मृगशीर्षं च वायुस्तत्वमुदाहृतं ८८
पूर्वाषाढा तथाश्लेषा मूलमार्द्रा च रोहिणी उत्तरभाद्रप
दा तोयतत्वं शतभिषा प्रिये ८९ धनिष्ठा रेवती ज्येष्ठानु
राधा श्रवणास्तथा अभिजिच्चोत्तराषाढा पृथ्वीतत्वमु
दाहृतं ९० वहन्नाडी स्थितो दूतो यत्पृच्छति शुभाशुभं त
त्सर्वं सिद्धिमायाति शून्ये शून्यं न संशयः ९१ तत्वे रामो ज
यं प्राप्तः सुतत्वेन धनंजयः कौरवा निहताः सर्वे युद्धे तत्ववि
पर्ययः ९२ जन्मांतरीयसंस्कारात् प्रसादादथवा गुरोः
केषांचिज्जायते तत्ववासना विमलात्मनां ९३ अथपं
चतत्वध्यानं ॥ लं बीजं धरणीं ध्यायेच्चतुरस्त्रां सुपीतभां
सुगंधं स्वर्णवर्णत्वमारोग्यं देहलाघवं ९४ वं बीजं चज्ञ

१०
14
लं ध्यायेदर्द्धचंद्रं शशितप्रभं क्षुत्तृषादिसहिष्णुत्वं जलमध्ये
षमज्जनं ९५ रं बीजं शिखिनं ध्यायेत् त्रिकोणमरुणप्रभं
बह्वन्नपानभोक्तृत्व मातपादिसहिष्णुता ९६ यं बीजं
पवनं ध्यायेद्वर्तुलं श्यामलप्रभं आकाशगमनाद्यंच
पक्षिवद्गमणं तथा ९७ हं बीजं गगनं ध्यायेन्निराका
रं बहुप्रभं ज्ञानं त्रिकालविषयमैश्वर्यमणिमादिकं ९८
स्वरज्ञानिनरा यत्र धनं नास्ति स्वतः परं गम्यते स्वरज्ञाने
न अनायासफलं भवेत् ९९ सर्वधनमध्ये नं सर्वमभिका
रश्च संपदा लक्षमेकोन सिध्यंति तत्वहीनो यदा नरः २००
स्नातं तेन समस्ततीर्थसलिलैः सर्वापि दत्तावनी यज्ञानां
च कृतं हि कार्यमखिलं देवाश्च संतर्पिताः संसाराच्च समु
द्धृताः स्वपितरस्त्रैलोक्यपूज्योप्यसौ यस्य ब्रह्मविचार
णे क्षणमपि स्थैर्यं मनः प्राप्नुयात् १ इति तत्वज्ञानं संपू
र्णं ॥ अथ युद्धविजयप्रकरणं ॥ श्रीदेव्युवाच देवदेव
महादेव महज्ज्ञानं स्वरोदयं त्रिकालविषयं ज्ञानं कथं

भवति शंकर २ ईश्वर उवाच ॥ अर्घकांडं जय प्रश्नं शुभाशुभमिति त्रिधा एतत्त्रिकालविज्ञानं नान्यद्भवति सुंदरि ३ तत्वे शुभाशुभं कार्यं तत्वे जयपराजयं तत्वे समर्घं महार्घं च तत्वे त्रिपदमुच्यते ४ श्रीदेव्युवाच ॥ देवदेव महादेव सर्वसंसारतारक को नराणां परं मित्रं सर्वकार्यार्थसाधकं ५ श्रीशिव उवाच प्राण एव परं मित्रं प्राण एव परः सखा प्राणतुल्यः परो बंधुर्नास्ति नास्ति वरानने ६ देव्युवाच कथं प्राणस्थितो वायुर्देहे किं प्राणरूपकं तत्वेषु संचरन् प्राणो ज्ञायते योगिभिः कथं ७ शिव उवाच कायानगरमध्ये तु मारुतो रक्षपालकः प्रवेशे दशभिः प्रोक्तो निर्गमे द्वादशांगुलः ८ प्राणस्तु गतिर्देवि स्वभावाद्द्वादशांगुला भोजने वचने चैव गतिरष्टादशांगुला ९ गमने च चतुर्विंशा नेत्र वेदास्तु धावने मैथुने पंचषष्टिश्च शयने च शतांगुला १० प्राणस्य गुल हते न्यूने प्राणे निःकामता मता आनंदस्तु द्वितीय

११ ये स्यात् कविशक्तिस्तृतीयके ११ वाचासिद्धिश्चतुर्थे तु
दूरदृष्टिस्तु पंचमे षष्ठे त्वाकाशगमनं चंद्रवेगश्च सप्तमे १२॥
२ 1.5 अष्टमे सिद्धयश्चाष्टौ नवमे निधयो नव दशमे दशमूर्तिश्च
छायानाशो दशैकके १३ द्वादशे हंसचारश्च गंगामृतरसं
पिबेत् आनखाग्रं प्राणपूर्णः कस्य भक्ष्याच्च वै भ्रमः १४ ए
वं प्राणविधिः प्रोक्तः सर्वकार्यफलप्रदः ज्ञायते गुरुवाक्ये
न न विद्या शास्त्रकोटिभिः १५ यत्रांगे चूरते वायुस्तदंग
स्य करस्तलं सुप्तोत्थितो मुखं स्पृष्ट्वा लभते वांछितं फलं १६
प्रातश्चंद्रो रविः सायं यदि दैवान्न लभ्यते मध्याह्नान्मध्य
रात्राच्च परतस्तौ प्रवर्तते १७ दूरयुद्धे जयी चंद्रः समासन्ने दि
वाकरः वहन्नाड्यां गतः पादः सर्वसिद्धिः प्रजायते १८ यात्रा
रंभे विवाहे च प्रवेशे नगरादिके शुभकार्येषु सर्वेषु चंद्रचा
रः प्रशस्यते १९ अयनतिथिदिनेशाः स्वीयतत्वेन युक्तो यः
दिवहति कदाचिद्दैवयोगेन पुंसां स जयति रिपुसैन्यं जिंभ
मात्रस्वरेण प्रभवति न च विघ्नं केशवस्यापि लोके २० जी

वं रक्षन् जीव रक्षां जीवांगपरिधाय च जीवो ब्रजति योयु
द्धे जीवन् जयति मेदिनीं २१ भूमौ जले च कर्त्तव्यं गमनं शांति
कर्मसु वह्नौ वायौ प्रदीप्तेषु खे पुनि नेभिवेष्वपि २२ जीवेन
शस्त्रं वध्नीयाज्जीवेनैव विकाशयेत् जीवेन प्रक्षिपेच्छस्त्रं यु
द्धे जयति सर्वथा २३ आकृष्य प्राणपवनं समारोहेत वाहनं
समुत्तेत्पदं दद्यात् सर्वकार्याणि साधयेत् २४ अपूर्णे शत्रुसा
मग्री पूर्णेवास्य वलं यथा कुंभतो पूर्णतत्वस्थो जयत्येको व
सुंधरां २५ यन्नाडी वहते चांगे तस्यामेवाधिदेवता सन्मुखा
पि दिशा तेषां सर्वकार्यफलप्रदा २६ आदौ तु क्रियते मुद्रा
पश्चाद्युद्धं समाचरेत् सूर्यमुद्रा कृता येन तेषां सिद्धिर्न संस
यः २७ चंद्रप्रवाहेप्यथ सूर्यवाहे भटाः समायांति च योद्धु
कामां समीरणस्तत्वविदां प्रपीतो या शून्यता सा प्रतिकाल
दृष्टः २८ यां दिशं वहते वायुर्युद्धं तद्दिग्विदापयेत् जयत्येवन
संदेहः शक्रोपि यदि वाग्रतः २९ यत्र नाड्यां वहेद्वायुस्तदंग
प्राणमेव च आकृष्य गच्छेत्कर्णांतं जयत्येव पुरंदरं ३० प्रति

पत्तप्रहारेभ्यो पूर्णांगं यो भिरक्षते नंतस्यवञ्रानिः शक्तिवलि
16 ष्टैरपिहन्यते ३१ अंगुष्टतर्जनीवंशे पादांगुष्टस्तथाध्वनि यु
द्धकालेच कर्त्तव्यं लक्षयोधजयोभवेत् ३२ निशाकरेरवौ
१२ चारे मध्येयस्यसमीरणः स्थितोरक्षेद्दिगंतानि जयाकांं
क्षीनरः सदा ३३ स्वासप्रवेशकालेतु दूतोजल्पवांछितं
तस्यार्थः सिद्धिमायाति निर्गमेनैव सुंदरि ३४ लाभादीन्यपि
कार्याणि पृष्टानि कीर्त्तितानिच जीवेविशति सिद्ध्यंति हानि
र्निःसरणेभवेत् ३५ नरेदक्षास्वकीयाच स्त्रियावामाप्रश
स्यते कुंभकं युद्धकालेच त्रयोनाडीत्रयोगति ३६ हका
रस्यसकारस्य विनाभेदास्वरः कथं सोहंहंसः पदेनैव वं
जीवोजयतिसर्वदा ३७ शून्यांगं पूरितंकृत्वा जीवांगंगो
पयेज्जयी जीवांगे घातमाप्नोति शून्यांगेरक्षतेतदा ३८ चंद्रे
वाप्यथवासूर्ये यदिपृछतिपृछकः तत्रघातोनजायेत शू
न्येघातंविनिर्दिशेत् ३९ भूतत्वेनोदरेघातः पादस्थानेंवुना
भवेत् उरस्थानेग्नितत्वेन करस्थानेचवायुना ४० शिरसि

व्योमतत्वेन ज्ञातव्यो घातनिर्णयः एवं पंचविधो घातः स्व
रशास्त्रे प्रकाशितः ४१ परद्रव्ये तथा ग्राह्ये गृहान्निर्गमने
पि च यदंगे वहते नाडी ग्राह्यं गतिकरं न्नृणां ४२ हरिद्रं जग॰
ति तस्य गृहे नास्ति कदाचन षण्मासमेव नाद्रस्य द्विरद्रोग
र्जेते गृहे ४३ योद्धद्वयकृते प्रश्ने पूर्णस्थे प्रथमो जयी रिक्तं॰
याति द्वितीयस्तु वंद्ते देशिकाः सदा ४४ पूर्णनाडी कृते प्राणे
वहेत्सूर्यं तदयतः शून्यस्थाने कृतं शत्रुर्म्रियते नात्र संशयः ४५
वामचारे समं नाम यस्य तस्य जयो भवेत् पृच्छतो दक्षिणे भागे
विजयी विषमाक्षरः ४६ यदा पृच्छति चंद्रस्थस्तदा संधान
मादिशेत् पृच्छेद्यदा च सूर्यस्थस्तदा ज्ञानी हि विग्रहं ४७ पार्थि
वे समकृतं युद्धं सिद्धं भवति वारुणे वह्नौ युद्धस्य तेजः स्यान्मृत्यु
र्वायुश्च नाभसः ४८ निश्चलां धारणां कृत्वा पुष्पं हस्ते निपा
तयेत् पूर्णांगे पुष्पपतने पूर्णं शून्ये तु शून्यता ४९ तिष्ठन्नुपवि
शन्वापि प्राणमाकर्षयन्निजं मनोभंगमकुर्वाणः सर्वकार्ये
षु जीवति ५० जीवेन स्थापयेद्वायं जीवेनारं भयेत्पुनः जीवेन

क्रीडते नित्यं द्यूतं जयति सर्वथा ५१ कथंचिद्विजयी युद्धे स्व
रज्ञेन विना नृपः घुणावर्णोपमं तत्तु यथांधः चटकाग्रहः ५२
17 स्वरज्ञानी बलाद्ग्रे निःफलं कोटिधा भवेत् इहलोके परत्र
च स्वरज्ञानी बली सदा ५३ दश शतायुतं लक्षं देशाधिपब
लं क्वचित् शत क्रत्वा सुरेंद्राणां बलं कोटिगुणं भवेत् ५४
ओंकारः सर्ववर्णानां ब्रह्मांडे भास्करो यथा मर्त्यलोके त
१३ था पूज्यः स्वरज्ञानी पुमानपि ५५ एकाक्षरप्रदातारं नाडीभे
दनिवेदकं पृथिव्यां नास्ति तद्द्रव्यं यद्दत्वा चानृणी भवेत् ५६
श्रीदेव्युवाच परस्परं मनुष्याणां युद्धे प्रोक्तो जयस्तथा यम
युद्धे समुत्पन्ने मनुष्याणां कथं जयः ५७ ईश्वर उवाच ध्या
येद्देवं स्थिरे जीवे जुहुयाज्जीवसंगमे इष्टसिद्धिर्भवेत्तस्य महा
लाभो जयस्तथा ५८ निराकारसमुत्पन्नं सकारं सकलं जग
त् तत्साकारं निराकारे ज्ञाने भवति तन्मयं ५९ इति युद्धजयप्रक
रणं ॥ नरयुद्धं यमयुद्धं च त्वया प्रोक्तं महेश्वर इदानीं देवदेवा
नां वशीकरणकं वद ६० चंद्रसूर्येण चाकृष्य स्थापयेज्जीव

मंडले आजन्मव शगा रामा कर्न्नव्या वायुज्ञोजमात् ६१ जी
वेन ग्र स्थते जीनो जीवो जीवस्य दीपते जीव स्थानेगतोजी
वो वालाजीवांतव धूप कृत् ६२ चंद्रं पिवति सूर्येण सूर्यं
पिवतिचंद्रत: अन्योन्य काल भावेन जीवेश्चंद्रतारकं ६३
एतज्ञानाति यो योगी एतत्स्मरति नित्यशः सर्वदुःखवि
निर्मुक्तोल भतेवांछितं फलं ६४ स्वी यांगे वहते नाडी त
न्नाडी रोधनं कुरु करेवक्त्रः समुंचन्वे पवनंजायतेयुवा ६५
उभयोः कुंभकंकृत्वा मुखे स्वासो निपीयसे निश्चयेयाय
हानाडी देवकन्यांवशं कुरु ६६ रात्र्यंत्रयामवेलायां प्रसु
प्तेकामिनीजने ब्रह्मबीजं पिवेयस्तु वालाजीवहरोनरः ६७
इतिदेवीवशप्रकरणं ॥ प्रायने वा प्रसंगेवा युवत्यालिंग
नेपिवा यन्त्र सूर्येण पिबेच्चंद्रं स भवेन्मकरध्वजः ६८ शि
वमालिंगते शक्त्या प्रसंगे दक्षिणोपिवा तत्क्षणाद्दापयेद्यस्तु
मोहयेत्कामिनी शतं ६९ सप्त भवन्नयं पंच वारान्संगे स्तुसू
र्यंगे चंद्रे द्विचतुः षड्ढांगने नेमांनु क्रमेणच ७० एवंकृ

नेतु करणेन वश्या भवति कामिनी यः सूर्यं प्रपिबेच्चंद्रं संभ
18 वेन्मकरध्वजः ११ सूर्यचंद्रे समाकृष्य सर्पाक्रांत्या धरोष्ठ
योः महतापद्मे मुखं स्पृष्ट्वा वारंवारमिदं चरेत् १२ आप्राण
मिति पद्मस्य यावन्निद्रावशंगताः पश्चाज्जागर्त्तवेलायां चो
ष्यते गलचक्षुषी १३ अनेन विधिना कामी वशयेत्सर्वका
मिनी इदं तु वाचा सन्यासिनि न्यासापरमेश्वरी १४ इति
१४ स्त्रीवश्यप्रकरणं ॥ ऋतुकालभवा नारी पंचमेह्नि यदा भवेत्
सूर्याचंद्रमसोर्योगी सेवनात्पुत्रसंभवः १५ शंखवल्लीगवां
दुग्धं घृतं पयो वहते यदा भर्तुरंगेव देहा कांदर्पे देहि त्रिभि
र्वचः १६ ऋतुस्नातापिबेन्नारी ऋतुदानं च योजयेत् रूप
लावण्यसंपन्नो नरः सिंहं प्रसूयते १७ सुषुम्णा सूर्यगं धेन
ऋतुदानं च यो न येत् अंगहीनः पुमान्यस्तु [illegible]ते कृपावि
ग्रहः १८ विषमांके दिवारात्रौ विषमांके दिनाधिपः चंद्र
नेत्राग्निकृत्वेषु वंध्यापुत्रमवाप्नुयात् १९ रतारंभे रविः पुं
सां सुरतांते सुधाकरः अनेन क्रमयोगेन नादत्ते दैवदंडकः २०

रतांरंभेरविः पुंसां स्त्रियां चैवसुधाकरः उभयोः संगमे
प्राप्ते वंध्यापुत्रमवाप्नुयात् ८१ चंद्र नाडीवहे प्रश्ने गर्भे
कन्या तदा भवेत् सूर्ये भवेत्तदा पुत्रो द्वयो गर्भो निहन्यते ८२
चंद्रे स्त्री पुरुषः सूर्ये मध्यमार्गे नपुंसकः गर्भप्रश्ने यदा
दूत प्रश्ने पुत्रः प्रजायते ८३ पृथ्वी पुत्री जलेपुत्रः कन्यकाः
तु प्रभंजने तेजसा गर्भपातः स्यान्नभस्यपि नपुंसकं ८४॥
शून्ये शून्यं युगे युग्मं गर्भपातश्च संक्रमे सूर्य भोगे कृते
पुत्रश्चंद्रचारे तु कन्यका ८५ विषुवे गर्भ पातः स्यात् भावी
वाथ नपुंसकः तत्ववित्स विजानाति कथितं तत्रसुंदरि ८६
गर्भाधानं मारुते स्याच्चंद्रः रवौ दुःशाख्यातो वारुणे सौख्ययुक्तः
गर्भ ज्ञावी स्वल्पजीवी चवह्नौ भोगीभव्यः पार्थिवे स्वार्थयु
क्तः ८७ धनवान्सौख्यसंयुक्तो भोगवान् गर्भसंस्थितः स्या
न्नित्यं वारुणे तत्त्वे व्योम्नि गर्भो निहन्यते ८८ माहेंद्रे सुसुतो
त्पत्तिर्वारुणेऽदुहिता भवेत् शेषेषु गर्भहानिः स्याज्जातमात्रस्य
वामृतिं ८९ इतिगर्भप्रकरणं॥ अथ संवत्सर प्रकरणं

चैत्रशुक्लप्रतिपदि प्रातस्तत्वविभेदतः पक्षेहि चन्द्रयोगोयो
19. गी द्दक्षिणे चोत्तरायने ६० चंद्रोदयस्य वेलायां वहमानी
य तत्वतः पृथिव्यापस्तथा वायुः सुभिक्षं सर्वसस्यजं ६१
तेजो व्योम्नि भयं घोरं दुर्भिक्षं कालतत्वतः एवं तत्वफलं ज्ञे
यं वर्षे मासे दिने तथा ६२ मध्यमा भवति क्रूरा दुष्टा सर्वत्र
१५ कर्मसु देशभंग महारोग क्लेशकष्टादि दुःखदा ६३ मेषसं
क्रांतिवेलायां स्वरभेदं विचारयेत् संवत्सरफलं ब्रूयाल्लो
कानां तत्वचिंतकः ६४ पृथिव्यादिकतत्वेन दिनमासा
ब्दजं फलं शोभनं च तथा दुष्टं व्योम मारुत पंचभिः ६५॥
सुभिक्षं राष्ट्रवृद्धिः स्याद्बहुसस्या वसुंधरा बहुवृष्टिस्तथा
सौख्यं पृथ्वीतत्वं वहेद्यदि ६६ अतिवृष्टि सुभिक्षं स्याद
रोग्यं सौख्यमेव च बहुसस्या तथा पृथ्वी जलतत्वं वहेद्यदि ६७
दुर्भिक्षं राष्ट्रभंगं स्याद्रोगोत्पत्तिसुदारुणा अल्पादल्पत
रा वृष्टिरग्नितत्वं वहेद्यदि ६८ मेषसंक्रांतिवेलायां वायुत
त्वं वहेद्यदि उत्पातोपद्रवा भीतिरल्पा वृष्टिस्सुरीतयः ६९॥

मेषसंक्रांतिवेलायां व्योमतत्वं वहेद्यदि तत्रापि शून्यता
ज्ञेया सस्यार्शीनांसुखस्यच ३०० पूर्णेप्रवेशने श्वासे स्व
स्वतत्वेन सिद्धिदः सूर्य्यचंद्रेन्यथाभूते संग्रहः सर्वसिद्धि
दः १ विषमे वह्नितत्वस्य ज्ञायते केवलं नभः तत्कुर्या
दनुसंग्राह्यं द्विमासेच महर्घता २ स्वरज्ञाने शिरोयस्य लक्ष्
म्मीपादे तथा भवेत् एकत्र शरीरंयस्य तस्य सुखंसदा भवेत् ३
नाडीत्रयं विजानाति तत्वज्ञानं तथैवच नैवतेन भवेत्तुल्यं
लक्षकोटिरसायनं ४ रवौसंक्रमणे नाडी गच्छांते च प्रसर्प्य
ति स्वानिले वह्नियोगेपि रौरवं जगतीतले ५ चैत्रमासि सि
तेपक्षे विद्युत्पातो घनक्षयः युद्धसंकर्षणे जाते विड्वरेवा
धिमासके ६ मूलमाहैयमस्यंतो कुंभेचैत्रे निरीक्षयेत् स
जला निर्जला प्रोक्ता निर्जलासजलास्तथा ७ इति संवत्सरफलं
अथ रोगप्रकरणं ॥ महीतत्वे स्वरोगंच जलेच जलमातरः ॥
खेचराखेजतत्वेषु वायुतत्वेच शाकिनी ८ शून्यतत्वेन रो
गिणः पित्तदोषसमुद्भवः दानं पुण्यं द्विजातीनां पिंडं श्राद्धं वि
धीयते ९ आदौ शून्यंगतः पृच्छेत्य श्चात्पूर्णो विशेषादिम्

च्छितोपि ध्रुवं जीवेत् यद्यर्थं परिपृच्छति १० चंद्रस्थाने स्थितो॰
20 जीवः सूर्यस्थाने च पृच्छति तदा प्राणैर्विनिर्मुक्तो यदि वै यक्ष
तैर्वृतः ११ पिंगलायां स्थितो जीवो वामे दूतस्य पृच्छति तदा॰
पि म्रियते रोगी यदि त्राता महेश्वरः १२ दक्षिणेन यदा वायुर्दुःखं
चं रौद्राक्षरं वदेत् तदा जीवति जीवश्चंद्रे समफलं भवेत् १३ जीवा
कारं च वा धृत्वा जीवाकारं विलोकयवा जीवस्थो जीवितं
पृच्छेत् तस्य स्याज्जीवितं ध्रुवं १४ प्रश्ने वाम्यः स्थितो जीवस्त
१६ दा जीवो हि जीवति ऊर्ध्वं वाति गतो जीवो याति जीवो यमालयं १५
यस्मिन्भागे चरेज्जीवस्तत्रस्थः परिपृच्छति तदा जीवति जी
वोसौ यदि रोगैः प्रपीडितः १६ वातोदये वातकरं च भक्ष्यं
पित्तोदये पित्तकरं च भक्ष्यं श्लेष्मोदये श्लेष्मकरं च भक्ष्यं॰
पुंसि प्रभुंक्ते प्रभवंति रोगाः १७ एकस्य भूतस्य विपर्ययेण
रोगाभिभूतिर्भवतीह पुंसां तयोर्द्वयोर्बंधुसुहृद्विपत्तिः प
क्षद्वये व्यत्ययतो मृतिः स्यात् १८ इति रोगप्रकरणं ॥ ॥
अथ कालज्ञानं ॥ मासादौ वत्सरादौ च पक्षादौ च यथा
क्रमं क्षयं काले परीक्षेच्च वायुचारवशात्सुधी १९ पंच

भूतात्मकं दीपं प्राणी स्नेहेन सिंचति रक्षयेत्सूर्यवातेन तेन जीवस्थि
रो भवेत् २० मारुतं बंधयित्वा तु सूर्यं बंधयते यदि अभ्यासाज्जीवते
जीवः सूर्यः कालोपि वंच्यते २१ गगनात् स्रवते चंद्रः कायपद्मा
नि सिंचयेत् कर्मयोगसदाभ्यासै रमते प्राणिसंश्रयात् २२ प्राणांके
चारयेद्रात्रौ दिवा चार्यो दिवाकरः इत्यभ्यासरतो योगी सयोगी ना
त्र संशयः २३ दिवा न पूजयेल्लिंगं रात्रौ देवीं न पूजयेत् वपुषिज्ञा
नजनकं पंचसूत्रसमन्वितं २४ अहोरात्रं यदेकत्र वहते यस्य मारु
तः तदा तस्य भवत्यायुः संपूर्णं वत्सरत्रयं २५ अहोरात्रद्वयस्या
पि पिंगलायां यदा गतिः तस्य वर्षद्वयं ज्ञेयं जीवितं तत्ववेदिभिः २६॥
त्रिरात्रं वहते यस्य वायुरेकपथे स्थितः वत्सरं यावदायुस्स्यात्
प्रवदंति मनीषिणः २७ संपूर्णं वहते सूर्यश्चंद्रमा नैव दृश्यते पक्षे
ण जायते मृत्युः कालज्ञानेन भाषितं २८ संपूर्णं वहते चंद्रः सूर्यो
नैव च दृश्यते पक्षेन जायते लाभः कालज्ञानेन भाषितं २९ मूत्रं पु
रीषं वायुश्च समकालं प्रजायते तदासौ चलितो ज्ञेयो दशाहे म्रियते
ध्रुवं ३० कोणावक्षांगुलीभ्यां तु किंचित्पीड्य निरीक्षयेत् य॰

शनद्दश्यते विंद्वाईश्याहेनजयो मतः ३१ एवं चंद्रप्रवाहं च सुख
21 लाभो जयो मतः सूर्यचंद्रप्रणाशेतु सद्यो मृत्युर्नसंशयः ३२॥
अरुंधती ध्रुवश्चैव विष्णो स्त्रीणि पदानि च आयुर्हीनानप
श्यंति चतुर्थं मातृ मंडलं ३३ अरुंधती भवेज्जिह्वा ध्रुवनासा
ग्रमुच्यते भ्रुवो मध्ये विष्णुपदं मस्तकं मातृ मंडलं ३४ श्रीदे
व्युवाच देवदेव महादेव कृपां कृत्वा वदप्रभो स्वरोदयविज्ञा
नस्य पात्रं भवति कीदृशं ३५ ईश्वरउवाच रसायनं योजानाति
एकाकी यश्चतिष्ठति भूपविद्यां सुप्रसिद्धः पात्रं देवि स्वरोदये ३६
स्वरस्तत्वं तथायुद्धं देवीवश्यमस्त्रियस्तथा गर्भोदृष्टरोगकालाख्यं
नवप्रकरणान्वितं ३७ इदंस्वरोदयंशास्त्रं सर्वज्ञेनप्रकाशितं पार्व
ती प्रेमवद्धेनलोकानां हितकाम्यया ३८ एवं प्रवर्तितं लोके प्रसि
द्धं सिद्धयोगिभिः आचंद्रार्कग्रहंजीयात पठतां सिद्धिदायकं ३९
इति श्री उमा महेश्वर संवादे इदं स्वरोदयंशास्त्रं संपूर्णं समाप्तं
११ शुभमस्तु संवत १८६५ आश्विन वदी १ सोमवार पुरुषोत्तम
क्षेत्रे लिषितं केनचिदुदासीनेन॥ श्रीराम श्रीराम श्रीराम॥




आकाशगती अंगुल २ स्वाद मलमला। स्वाभाव शून्याकार राग द्वेष लज्जा भयं मोह अपंच गुणाः॥




वायुगती ८॥ स्वाद खटा। स्वभाव भ्रमंन। धावन चलन गंधन सं कोचन प्रसारणा पंच प्रकृति॥




तेजकीगती ४ स्वाद चरपरा॥ स्वभाव तता॥ क्षुधा तृषा निद्रा कांति आलस्य पंच प्रकृतयः॥




जलगती १६॥ स्वाद खारा॥ स्वभाव सीतल॥ शुक्र शोणित लाल मूत्र मज्जा चेति प प्रकृतयः॥




पृथ्वीगती १२॥ स्वाद मीठा॥ स्वभाव कठोर॥ अस्थि मांस त्वचा नाडी रोमाणि चेति प्रकृतयः पंच॥

अथ पंचतत्वस्याहोरात्रिमध्ये दंडसंख्यामाह आकाशदंड ४ वायुदंड ८ तेज दंड १२ जलदंड १६ पृथिवी दंड २० सर्वदंडसंख्या ६०

१८

22

ॐ नमः शिवाय ॥ अथ हृदय कमले श्वास प्रमाणमाह नागैर्नीचैर्नि-
धिज्ञाश्रय नगर्तुकमितैः श्वास पर्यायकैर्वी त्वभ्रं वार्तीन लांबू द्विति
रस पयगुपर्यंतरधोष्प जुल्वे व्यताधुग्वावनीतो हृदयकमल जे पत्र
एकत्र तेन श्वासानां नाभिसंख्या नेन रसकमले ग्ह रनि पूर्णास्त्रिभूमी
त्र १ अथ पूर्वादिक्रमेण प्रतिपत्रं फलमाह इंद्रादि दिग्दलचरे श्वस
ने रेणाय भोक्तुं रुषेर्थ्य विषयाय मुदे गमाय चेतो भवेत् क्रपयितुं
चंतूपास्पराय। पत्र द्वयांतरगतेतु मुदे परस्मै २ अथ श्वाससंख्यया
घटी यंत्रं दर्शयति द्वे द्वे पत्रे शनैर्द्व वहत एहतयोः पंच पंचेति घड्या
नाकी १० गुर्वक्षरैरंक्षाप्यसुरथ नतला ३६० सु घटीकथ्यतेत्र॥
भुक्ताद्दिनित्रिघस्रे हिमगुरथ रविः प्रत्युषस्त्रेत्प्रवृत्तः श्रेयः
स्यादेकनाड्यां यदि वहति शिखी पंच घस्त्रे र्मृतिस्तत ३॥ ॥
नागैरिति नाभ्रस्यं ग त्रि संख्या तेनाकाशतत्वं त्रिंशं श्वासमितं वहतीति ज्ञेयं॥
एवं वायुतत्वं षष्टि श्वासमितं वहति। तेजस्तत्वं नवती श्वासमितं वहति॥ जल
तत्वं विंशत्यधिक शतं श्वासमितं वहति। पृथ्वितत्वं पंचाशताधिक शतं श्वा
स मितं वहति। एवं च एकस्मिन्पत्रे श्वास संख्या ६०० जाता॥ सर्वपत्रेषु संख्या ४८००
एकत्र मस्यावं भ्रम चयस्याहर्निशा सर्व श्वाससंख्या २१६०० जातेति ज्ञेयं॥

अत्र प्रतिपत्रसंख्यौ हर्षो भवतीति ज्ञातव्यं सर्वसाधारणेन



५ ॐ स्वस्ति श्रीगणेशाय नमः संवत् १९१२ मार्गशिर कृष्ण प्रति
पक्षा शनिवासरे कल्यादि ४।२।२२ रोहणी नक्षत्रे ४।१५
शिवयोग ०।१९।१८ दिनमान २५।२६ वृश्चिकार्क गतां
दि ८ प्रविष्टा ११ श्रीसूर्योदयादिष्टम् १०।२५।५ तत्सं
मये वृश्चिक लग्नोदय वर्षप्रवेशः शुभं भू ॥



